॥ स्कन्दोपनिषत् ५१ ॥

यत्रासंभवतां याति स्वातिरिक्तभिदाततिः । ।
संविन्मात्रं परं ब्रह्म तत्स्वमात्रं विजृम्भते ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

अच्युतोऽस्मि महादेव तव कारुण्यलेशतः ।
विज्ञानघन एवास्मि शिवोऽस्मि किमतः परम् ॥ १॥

न निजं निजवद्भाति अन्तःकरणजृम्भणात् ।
अन्तःकरणनाशेन संविन्मात्रस्थितो हरिः ॥ २॥

संविन्मात्रस्थितश्चाहमजोऽस्मि किमतः परम् ।
व्यतिरिक्तं जडं सर्वं स्वप्नवच्च विनश्यति ॥ ३॥

चिज्जडानां तु यो द्रष्टा सोऽच्युतो ज्ञानविग्रहः ।
स एव हि महादेवः स एव हि महाहरिः ॥ ४॥

स एव हि ज्योतिषां ज्योतिः स एव परमेश्वरः ।
स एव हि परं ब्रह्म तद्ब्रह्माहं न संशयः ॥ ५॥

जीवः शिवः शिवो जीवः स जीवः केवलः शिवः ।
तुषेण बद्धो व्रीहिः स्यात्तुषाभावेन तण्डुलः ॥ ६॥

एवं बद्धस्तथा जीवः कर्मनाशे सदाशिवः ।
पाशबद्धस्तथा जीवः पाशमुक्तः सदाशिवः ॥ ७॥

शिवाय विष्णुरूपाय शिवरूपाय विष्णवे ।
शिवस्य हृदयं विष्णुः विष्णोश्च हृदयं शिवः ॥ ८॥

यथा शिवमयो विष्णुरेवं विष्णुमयः शिवः ।
यथान्तरं न पश्यामि तथा मे स्वस्तिरायुषि ॥ ९॥

यथान्तरं न भेदाः स्युः शिवकेशवयोस्तथा ।

देहो देवालयः प्रोक्तः स जीवः केवलः शिवः ॥ १०॥

त्यजेदज्ञाननिर्माल्यं सोऽहंभावेन पूजयेत् ।
अभेददर्शनं ज्ञानं ध्यानं निर्विषयं मनः ।
स्नानं मनोमलत्यागः शौचमिन्द्रियनिग्रहः ॥ ११॥

ब्रह्मामृतं पिबेद्भैक्ष्यमाचरेद्देहरक्षणे ।
वसेदेकान्तिको भूत्वा चैकान्ते द्वैतवर्जिते ।
इत्येवमाचरेद्धीमान्स एवं मुक्तिमाप्नुयात् ॥ १२॥

श्रीपरमधाम्ने स्वस्ति चिरायुष्योन्नम इति ।
विरिञ्चिनारायणशङ्करात्मकं नृसिंह देवेश तव
प्रसादतः ।
अचिन्त्यमव्यक्तमनन्तमव्ययं वेदात्मकं ब्रह्म निजं विजानते
॥ १३॥

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥ १४॥

तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं
पदम् ।
इत्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति
वेदानुशासनमित्युपनिषत् ॥ १५॥

॥ इति कृष्णयजुर्वेदीय स्कन्दोपनिषत्समाप्ता ॥